

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥
॥ श्रीमते अग्रदेवाचार्याय नमः ॥

# ॥ श्रीजानकी जयति स्तोत्रम् ॥

*This text has been prepared by Vishal Pandey (B.Tech IIT Kanpur) with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara Jagadguru Rāmānandāchārya Śrī Svāmī Rāmabhadrāchārya***

**सीतानाथ समारम्भां रामानन्दार्य मध्यमाम् ।**
**अस्मदाचार्य पर्यन्तां वन्दे श्री गुरु परम्पराम् ॥**

# अथ श्रीजानकी जयति स्तोत्रम्

अर्च्यां शिवार्चितां दिव्यैरलंकारैरलंकृताम् ।
स्तुतिं चकार स्तोत्रेण महाविष्णुर्महाशिवः ॥ १ ॥

श्रीमहाविष्णुरुवाच -

जयति जनकपुत्री राम वामांक संस्था जयति युगविधात्रीं विश्वधात्रीं कराब्जा ।
कनकसदनशोभां लोकचित्रां लिखन्तीं रघुवरवरभागा भाविनी मंगलं मे ॥ २ ॥

कनकभवनखण्डे पादसंचारणाद्वै सितमणिगणभूमिः पद्मरागास्ति यस्या ।
जयतु जनकजाया चिन्मयी ब्रह्मरूपा रघुवरमुददात्री सद्गुणानां धरित्री ॥ ३ ॥

मुकुरगृहरमन्त्याश्चन्द्रकोटिश्चभित्तौ सततमुदयमस्या आस्य मेवा करोद्वै ।
कलित कमलश्रेणी तत्र तत्रैव जाता करकमल विभावैर्निर्दिशन्त्याश्च चित्रम् ॥ ४ ॥

जयति जनकपुत्र्याः पादपद्मप्रभावो यदनुगतनखानां पंक्तितश्चन्द्रपंक्तिः ।
विलसति खलु लोके भिन्न ब्रह्माण्डके स्वे तदभिगत कलैका शंकरस्यापि भाले ॥ ५ ॥

जयति जनकपुत्र्याः पादसंचारण श्रीश्चकितमपि विधत्ते याञ्च वीक्ष्येन्द्र नागाः ।
निज हृदि तनुभावं राजहंसाः विदध्युः रघुवररस मूर्तिर्वीक्ष्य मोदाब्धि मग्नः ॥ ६ ॥

जयति जनकजायानेत्रयुग्मं विशालं रघुवर रसवांस सौकुमार्यादि भासम् ।
प्रणतजन दयार्द्रं कोप भावाऽस्पृशं वै मुकुलितमिवदोषान्वीक्षितुं सेवकानाम् ॥ ७ ॥

जयति जनकपुत्र्या मुद्रिका कंकणाभ्यां विभूषित करयुग्मं कञ्जमेवाप्त नालम् ।
निजकृतदुरितेभ्य स्त्राशमेवाप्तकेषु स्वभयवरदमुद्रं स्वाशिषांवत्सुमुद्रम् ॥ ८ ॥

जयति जनकपुत्र्यारागविद्या समग्रं रघुपतिमतिकर्षं मोदवर्षं विचित्रम्।
अमितगति सुतालं मूर्छनाग्रामजालं स्वरमुनिमितयुक्तं ग्रामयुक्तं त्रिभिर्वै॥ ९॥

जयति जनकजाया भारती भव्यरूपा वसुरसपरिपूर्णाशब्दशय्या मृतासा।
ऋजु रचितपदानां संहिता संस्कृता या रघुपति मति दीक्षालंकृतेर्युग्मशिक्षा॥ १०॥

जयति जनकपुत्र्याः पारमैश्वर्यभावो सुरानरमुनिसिद्धैर्याञ्छया स्तूयमानः।
अमित विभवलक्ष्मीर्लोकब्रह्माण्डभिन्नाः प्रभवति खलु यस्या अंशतस्तांनिषेवे॥ ११॥

जगदुदयकरैका कालरूपाद्वितीया पुनरपिगतमध्ये पालने पातु दक्षा।
तवपदनखा दीप्त्या शक्तिरेकासमर्था प्रभवति खलु सीतातिसृणां भूतभावा॥ १३॥

तव पतिपद स्वङ्काद् ब्रह्मविष्णुर्हरोऽयं अनुजभवगतरूपास्तेऽपि ताभिःसमेता।
रचयतिपुनरेकापालयेत् भक्षयेद्वै निवसति निजलोके यावदीक्ष्यास्ति ते वै॥ १३॥

त्वमसिपरतमेशी नैव त्वत्तः परास्यात्तवपति रघुनाथोऽसौ समस्तात्परात्मा।
ननु भवति तु भेदोलिङ्गः व्याख्यानशास्त्रे भवति न खलुतत्त्वे राम सीतास्वरूपे॥ १४॥

तवगुणगण मूर्त्तिः स्यामहं रामचन्द्रः प्रथम गुरुवरं मे श्रीमहाशम्भुरास्ते।
उररि कुरू ममेदं स्तोत्रकं रामसीते कृतमपि गुरूणा मे साहसं स स्वरोक्तम्॥ १५॥

श्रीयाज्ञवल्क्य उवाच -

एवं कृत्वा स्तवं देवं देवो महाविष्णुर्महाहरः।
समुवाच शिवं देवं प्रशंसापूर्वया गिरा॥ १६॥

॥ इति श्रीजानकीजयतिस्तोत्रं सम्पूर्णम्॥
॥ श्रीस्वामी जनकराजकिशोरीशरण श्रीरसिक अली विरचितं अमररामायणान्तर्गत श्रीजानकीजयति स्तोत्रम्॥